## अथ तृतीयः परिच्छेदः ॥

तदेवमात्मनः सत्ता दर्शिताऽन्यविलक्षणा ।
अथ चिद्रूपतां वक्ष्ये बुद्धिवृत्तिविलक्षणाम् ॥ १ ॥
अनुभूतिश्चितिर्बोधो वेदनं चोच्यते पुमान् ।
वेद्यं जडं तमोऽज्ञानं प्रधानादिकमुच्यते ॥ २ ॥
वेदनं वेद्यसम्बन्धादेव वेत्त्रभिधीयते ।
यथा प्रकाश्यसम्बन्धात् प्रकाशोऽपि प्रकाशकः ॥ ३ ॥
यथा वाऽर्थोपरागेण भानमर्थस्य भासकम् ।
एवं वेद्योपरक्तस्याऽस्यांशस्याऽऽधारताऽऽत्मनि ॥ ४ ॥
असङ्गायां चितौ वेद्योपरागोऽयं न धीष्विव ।
किन्तु साक्षाद् द्वारतो वा चिति तत्प्रतिबिम्बनम् ॥ ५ ॥
वाह्यं वृत्त्याख्यकरणाभावादनुपरागतः ।
चितिर्नेक्षते चेत्यं विभुत्वेऽपि च सर्वतः ॥ ६ ॥
तथा चिदपि वृत्त्याख्यकरणाभावतोऽर्थवत् ।
स्वगोचरां वृत्तिमृते तिष्ठत्यज्ञातसत्तया ॥ ७ ॥
तदेवं चिन् निराकारा प्रकाशाकाशरूपिणी ।
तिष्ठत्यव्यक्तरूपा च मोक्षादौ वृत्त्यभावतः ॥ ८ ॥
बुद्धिवृत्तिस्तु साकारा परिच्छिन्ना च दीपवत् ।
व्यक्ता च सर्वदा तद्वदसङ्गा क्षणभङ्गुरा ॥ ९ ॥
जडा च परदृश्यत्वाद् घटदीपादिवन् मता ।
वृत्तेः प्रकाशता त्वर्थाकारत्वादत्नैव चि ॥ १० ॥
यथाऽऽस्याकारतार्हत्वादादर्शस्तत्प्रकाशकः ।
सर्वाकारत्वयोग्यत्वात् सैवं सर्वप्रकाशिका ॥ ११ ॥

न पुनर्वृत्तिद्रष्टृत्वं चितस्तद्भिन्नद्रष्टृता।
वृत्तेर्यतो गौरवं स्याद् द्वयोर्ज्ञातृत्वकल्पने ॥ १२ ॥
बुद्ध्यारूढं त्वन्यवस्तु तद्द्वारा प्रतिबिम्बितम्।
पश्यत्यनुभवो नाऽन्यो द्रष्टा बुद्ध्यादिकोऽखिलः ॥ १३ ॥
इत्येवं बुद्धिवृत्तिभ्यो वैलक्षण्यं चितीरितम्।
चिदचित्त्वाख्यवैधर्म्यं देहादिभ्यः स्फुटन्त्विदम् ॥ १४ ॥
अन्योन्यप्रतिबिम्बेन सारूप्याद् वृत्तिबोधयोः।
बोधव्यवहृतिर्वृत्तौ लोहेऽग्निव्यवहारवत् ॥ १५ ॥
नैवाऽल्पबुद्ध्याशक्योऽयं विवेको वृत्तिबोधयोः।
तार्किका यत्र सम्मूढाः साङ्ख्यानां श्रेष्ठता यतः ॥ १६ ॥
विज्ञानवादिनो बौद्धा वृत्तिबोधाविवेकतः।
ज्ञातात्मत्वश्रुतौ मूढा मेनिरे क्षणिकां चितिम् ॥ १७ ॥
सत्त्वपुंसो विवेकोऽयं वृत्तितद्बोधरूपयोः।
नाऽशक्यः सुधियां यद्वद्धंसानां क्षीरनीरयोः ॥ १८ ॥
एतदन्तश्च संसारो मोक्षस्तत्रैव संस्थितः।
यद् वृत्तिभ्यो विवेकेन तद्बोधस्याऽवधारणम् ॥ १९ ॥
सर्वोऽप्यनुभवं वेद न कश्चिदपि वेदताम्।
विवेकमात्रमस्मिन् हि भासमानेऽप्यपेक्षते ॥ २० ॥
आत्मा विवेक्तुं बाह्यार्थे न शक्यो वृत्तिमिश्रणात्।
अतो वृत्तौ विवेक्तव्यो वृत्तिबोधतयैव सः ॥ २१ ॥
यथा बुद्ध्या विवेकार्हो नाऽग्निरङ्गारमिश्रणात्।
सोऽङ्गारे तु विवेकार्हो काष्ठदग्धृतया स्फुटम् ॥ २२ ॥

अतएव श्रुतौ स्वप्ने दृश्यवृत्तिविवेकतः ।
स्वयंज्योतिःस्वरूपेण तस्या द्रष्टा प्रदर्शितः ॥ २३ ॥
साक्षात् प्रकाशो यो यस्य स तद्भिन्नो मतो बुधैः ।
घटादिभ्यो यथाऽऽलोक आलोकाच् चाऽपि वृत्तयः॥२४॥
वृत्तेः साक्षात् प्रकाशत्वादतो ऽनुभवरूपकः ।
वृत्तिभ्यो भिन्न आत्मेति शीघ्रो मार्गः स्वदर्शने ॥ २५ ॥
एवमादिप्रकारेण बुद्धिसत्त्वप्रकाशतः ।
विलक्षणतया सिद्धश्चित्प्रकाशोऽस्य भासकः ॥ २६ ॥
स्वप्नदेहादिदृष्टान्तैस्तस्माच्छ्रुत्यादिदर्शितैः ।
जाग्रद्देहेन्द्रियार्थेभ्यश्चितिर्भिन्नतया मता ॥ २७ ॥
स्वप्ने देहादिकं सर्वं चिद्भिन्नं चिति भासते ।
जाग्रत्येवं विशेषस्तु यद् बाह्यमपि भासते ॥ २८ ॥
स्वप्ने मनोमयत्वाच् च साक्षाच् चिद्विषयोऽखिलम् ।
करणद्वारतो बाह्यं चितो जाग्रति गोचरः ॥ २९ ॥
सर्वं देहादिकं स्वप्नजाग्रतोरेकरूपतः ।
भाति चिद्योम्नि नाऽत्रार्थबाह्यान्तर्भेदतो भिदा ॥ ३० ॥
चिद्व्योम्नि वासनातो धीः प्रमाणाद् वाऽर्थरूपिणी।
ततश्चितोऽर्थभानं यत् तत् समं स्वप्नजाग्रतोः ॥ ३१ ॥
तदिदं स्वानुभूत्यैव प्रोच्यते न परोक्षतः ।
स्वप्नदृष्टान्तसदृशो नोपायोऽस्त्याऽऽत्मदर्शने ॥३२॥
सुषुप्तौ हि यथा स्वप्ने स्वात्मन्येवेक्षतेऽखिलम्।
आत्मानं चैकदेशस्थं मन्यते जागरे तथा ॥ ३३ ॥

सुषुप्तिरात्मनस्तत्त्वं स्वरूपावस्थितेस्तदा।
जाग्रत्स्वप्नौ मायिकौ तु मृषासारूप्यतो धिया॥ ३४॥
बुद्धेः सुषुप्तिस्तमसाऽऽवरणं तद्विलक्षणा।
चितेः सुषुप्तिर्वृत्त्याख्यदृश्यावरणशून्यता॥ ३५॥
पूर्णः कूटस्थनित्यश्च स्वस्वधीमात्रवृत्तिदृक्।
वृत्त्याख्यदृश्यविरहात् सर्वदा नेक्षते पुमान्॥ ३६॥
वृत्तिदेशे यथा बोधस्तथा सर्वत्र सर्वदा।
वृथैव तप्यते मूढैर्व्ययनाशादिनाऽऽत्मनः॥ ३७॥
दुःखभोगमहारोगनिदानं देहगेहिनी।
बुद्धिर्न त्यज्यते मूढैर्महानिद्रासुखं यतः॥ ३८॥
अनादिबुद्धिगार्हस्थ्यं विवेकस्त्यज्यते न चेत्।
न मोक्षो बाह्यसन्न्यासादिहाऽमुत्राऽसुखं परम्॥ ३९॥
समचिन्मात्ररूपेषु स्वपरात्मसु सर्वदा।
बुद्धिमात्रविवेकेन स्वपरादिभिदा मृषा॥ ४०॥
चिन्मात्रे निर्गुणे स्वामिन्यारोप्यैवाऽऽत्मकर्तृताम्।
स्वाम्यवज्ञापराधेन बध्यते धीः स्वकर्मभिः॥ ४१॥
साध्वी तु धीः पतिं दृष्ट्वा याथातथ्येन तत्परा।
दृष्टाऽऽनन्दमयी चाऽन्ते पतिदेहे लयं व्रजेत्॥ ४२॥
नाहं कर्ता सुखी दुःखी चिन्मात्राकाशरूपकः।
एवं नाथं चिन्तयन्ती न पत्युर्दुःखभोगदा॥ ४३॥

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे आत्मानात्म-
नोश्चिदचित्त्ववैधर्म्यपरिच्छेदः॥ ०॥

## अथ चतुर्थः परिच्छेदः ॥

इत्येवमात्मनः प्रोक्तो बुद्ध्यादिभ्यो विलक्षणः ।
चित्प्रकाशोऽधुनाऽऽनन्दरूपता वक्ष्यते तथा ॥ १ ॥
दुःखं कामसुखापेक्षा सुखं दुःखसुखात्ययः ।
इति स्मृतेः सुखात्मत्वं नित्यनिर्दुःखताऽऽत्मनः ॥ २ ॥
परिभाषाबलाद् रूढिबाधः सर्वत्र सम्मतः ।
अन्यथा परिभाषेयं मोक्षशास्त्रे भवेद् वृथा ॥ ३ ॥
यद्वा परोक्षवादेन परमप्रियताप्तये ।
रूपिका सुखगीः पुंसि विभुत्वाप्त्यै खशब्दवत् ॥ ४ ॥
नाऽऽनन्दं न निरानन्दमित्यादिश्रुतिभिः स्फुटम् ।
आत्मन्यानन्दरूपत्वनिषेधाद् युक्तिसंयुतात् ॥ ५ ॥
उपास्याद्यर्थशून्यत्वान् नेति नेति श्रुतेस्तथा ।
निषेधवाक्यं बलवद् विधिवाक्यादिति स्थितिः ॥ ६ ॥
निर्निरानन्दमिति च स्वोपाध्यानन्दभोक्तृताम् ।
स्वामित्वरूपिणीं वक्ति न निर्धन इतीव हि ॥ ७ ॥
प्रेयोऽन्यस्माच्च सर्वस्मादिति श्रुत्या सुखादपि ।
उक्त आत्मा प्रियस्तस्य सुखत्वोक्तिश्च नोचिता ॥ ८ ॥
आनन्दाद्याः प्रधानस्य इति वेदान्तसूत्रतः ।
वेदान्तेऽपि न सिद्धान्त आत्मनः सुखरूपता ॥ ९ ॥
विस्तराद् ब्रह्ममीमांसाभाष्येऽस्माभिः परीक्षितम् ।
चितेरसुखरूपत्वं प्रेमा व्याख्यायतेऽधुना ॥ १० ॥

मा न भूवमहं शश्वद् भूयासमितिरूपकः ।
निर्निमित्तोऽनुरागो यः स प्रेमा परमश्चिति ॥ ११ ॥
अन्याशेषतया बुद्धेः स्नेहोऽयं न सुखेष्वपि ।
अतः प्रियतमः स्वात्मा नाऽन्योऽतो ह्यधिकः प्रियः ॥ १२ ॥
आत्मत्वेनाऽऽत्मनि प्रेमा न सुखत्वाद्यपेक्षते ।
अहं स्यामिति चेद् यस्मात् सुखं स्यामिति नेष्यते ॥ १३ ॥
तथा च सुखतादुःखाभावते वाऽऽत्मताऽपि च ।
प्रेम्णि प्रयोजिका सिद्धा स्वतःप्रेमात्मतैव तु ॥ १४ ॥
तस्माद् वस्तुत आत्मैव प्रियो नौपाधिकत्वतः ।
औपाधिकीतरप्रीतिरस्थिरत्वान् न तात्त्विकी ॥ १५ ॥
प्रीतिरन्यत्र चाऽनित्याऽविवेकाद्यैः सुखादिषु ।
आत्मप्रीतिस्तु नित्याऽतोनित्यानन्दः पुमान् मतः ॥ १६ ॥
आत्मनः प्रियतां बुद्धिर्यदि पश्येत् समाहिता ।
सर्वातिशायिनीं तर्हि सुखाब्धौ किं न मज्जति ॥ १७ ॥
प्रियदर्शनतो बुद्धेः सुखं लोकेषु दृश्यते ।
अतोऽनुमेयं परमप्रियदृष्ट्या परं सुखम् ॥ १८ ॥
आत्मार्थत्वेन सर्वत्र प्रीतिरात्मा स्वतः प्रियः ।
इति शश्वच्छ्रुतिः प्राह आत्मदृष्टिविधित्सया ॥ १९ ॥
ततोऽप्यनुपमं ज्ञेयं प्रियात्मेक्षणतः सुखम् ।
भुञ्जते तत् सुखं धीरा जीवन्मुक्ता महाधियः ॥ २० ॥
अन्तरात्मसुखं सत्यमविसंवादि योगिनम् ।
अपश्यन् कृपणो बाह्यसुखार्थी वञ्चितो जनः ॥ २१ ॥

सुखाशया बहिः पश्यन् देही हीन्द्रियरन्ध्रकैः ।
वातायनैर्गृहीत्वाऽन्तः सुखं वेत्ति न बाह्यदृक् ॥ २२ ॥
दुःखलभ्यान् दुःखमयान् परिणामेऽतिदुःखदान् ।
विषयोत्थान् सुखाभासान् धिक् स्वात्मसुखरोधकान् ॥२३॥

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे आत्मानात्मनोः प्रियाप्रियत्ववैधर्म्यपरिच्छेदः ॥ * ॥

---

## अथ पञ्चमः परिच्छेदः ।

परिच्छेदत्रयेणोक्तं सच्चिदानन्दरूपकम् ।
गीयमानं श्रुतिस्मृत्योरात्मनो लक्षणत्रयम ॥ १ ॥
तद्वैपरीत्यमन्येषां लक्षणं चेरितं स्फुटम् ।
आभ्यां तु गुणदोषाभ्यां विवेको दोषहृत् परः ॥ २ ॥
नैर्गुण्यसगुणत्वादिवैधर्म्याण्यपराण्यपि ।
बहूनि वच्म्ये सङ्क्षेपात् पुम्प्रकृत्योरतः परम् ॥ ३ ॥
धियोऽर्थाकारया वृत्त्या जनितत्वात् सुखादयः ।
सामानाधिकरण्येन कल्प्यन्ते लाघवाद् धियाम् ॥ ४ ॥
महदादेर्जडत्वेन तद्धेतुश्च जडो मतः ।
कार्यकारणसाजात्यं दृष्टं लोके हि सर्वतः ॥ ५ ॥
अत आत्मा बोधमात्रतया सिध्यति लाघवात् ।
गुणाः सर्वे प्रकृत्यादेर्विकारास्चेतरेऽखिलाः ॥ ६ ॥
आत्मा तु निर्गुणस्तद्वत् कूटस्थश्च मतो बुधैः ।
चितेः कूटस्थसञ्ज्ञा तु स्थिरत्वाद् गिरिकूटवत् ॥ ७ ॥

लेपश्चेतरसम्बन्धे तद्रूपैरुपरक्तता ।
यथा विषयसम्बन्धाद् बुद्धौ भवति वासना ॥ ८ ॥
भाण्डादौ द्रव्ययोगाच् च तत्तद्द्रव्यस्य वासना ।
लेपहेतुश्च सम्बन्धः सङ्गः सम्बन्धि चाऽञ्जनम् ॥ ९ ॥
अतो निरञ्जनोऽसङ्गो निर्लेपश्चोच्यते पुमान् ।
नभःपुष्करपत्रादिदृष्टान्तैः परमर्षिभिः ॥ १० ॥
चिन्मात्रानन्तशक्त्यब्धौ पुमर्थपवनेरिताः ।
सत्त्वादिशक्तयो यान्ति विश्वबुद्बुदरूपताम् ॥ ११ ॥
अत ईशश्चिदात्मैव जगतः सन्निधानतः ।
मणिवत् प्रेरकत्वेन जडानामयसामिव ॥ १२ ॥
पुमानेव जगत्कर्ता जगद्भर्ताऽखिलेश्वरः ।
स्वाम्यर्थे भृत्यवद् यस्माज् जडवर्गः प्रवर्तते ॥ १३ ॥
करणानि च देहेषु राजार्थमधिकारिवत् ।
भोग्यजातं मनोमन्त्रिण्यर्पयन्ति स्वभावतः ॥ १४ ॥
तैर्भोग्यैर्युक्तमात्मानमावेदयति धीश्चितिं ।
इच्छामात्रेण तद् भुङ्क्ते राजेवाऽऽत्माऽखिलेश्वरः ॥ १५ ॥
धनादेरीश्वरो देहो देहस्येन्द्रियमीश्वरम् ।
इन्द्रियस्येश्वरी बुद्धिर्बुद्धेरात्मेश्वरः परः ॥ १६ ॥
कूटस्थस्येश्वरस्याऽन्यो नाऽस्ति प्रेरक इत्यतः ।
ईश्वरस्याऽवधित्वेन द्रष्टा वै परमेश्वरः ॥ १७ ॥
अन्यस्याऽऽगन्तुकैश्वर्यं बहुव्यापारसङ्कुलम् ।
निर्व्यापारस्य निर्दोषमनाद्यैश्वर्यमात्मनः ॥ १८ ॥

सर्वशक्तिमयो ह्यात्मा शक्तिमण्डलताण्डवः ।
संसारं तन्निवृत्तिं च माययाऽऽप्नोति हेलया ॥ १९ ॥
सर्वातिशायि निर्दोषमैश्वर्यमिदमात्मनः ।
पश्यतो योगिनो ब्राह्ममप्यैश्वर्यं तृणायते ॥ २० ॥
बाह्यस्याऽऽत्मोच्यते देहो देहस्याऽऽत्मेन्द्रियाणि च ।
बुद्धिरात्मेन्द्रियान्तस्य बुद्धेरात्मा तु चिन्नभः ॥ २१ ॥
अत आत्मावधित्वेन परमात्मोच्यते चितिः ।
तथाऽन्तःकरणैर्योगाज् जीव इत्युच्यते चितिः ॥ २२ ॥
अविद्याकार्यरहितः परमात्मेति च स्मृतिः ।
यस्य यद् व्यापकं तस्य तद् ब्रह्माऽतो धरादिकम् ॥२३॥
प्रकृत्यन्तं भवेद् ब्रह्म स्वस्वकार्याद्यपेक्षया ।
सेश्वरे साङ्ख्यवादेऽपि चितेरेवाऽनुमन्यते ॥ २४ ॥
परे वा परमात्मत्वादिकं तु न जडे क्वचित् ।
अध्यक्षव्यापकत्वाभ्यां परं ब्रह्म तु चेतनः ॥ २५ ॥
तस्याऽध्यक्षं व्यापकं च न हेतुविधयाऽस्ति हि ।
असङ्ख्यात्मा नभोराशिरविभक्तैकरूपकः ॥ २६ ॥
सोऽतश्चिद्घनविज्ञानघनात्मघनसंज्ञकः ।
प्रकाशस्याऽनपेक्षत्वात् स्वस्य द्रष्टृतयाऽपि च ॥ २७ ॥
स्वप्रकाशः पुमानुक्त इतरे तद्विलक्षणाः ।
भोगोऽभ्यवहृतिः सा च कूटस्थे नाऽस्ति धीष्विव ॥ २८ ॥
धीवृत्तिप्रतिबिम्बाख्यगौणभोगा तु भोक्तृता ।
साक्षाद् धीवृत्तिद्रष्टृत्वाद् बुद्धिसाक्ष्युच्यते पुमान् ॥ २९ ॥

विना विकारं द्रष्टृत्वात् साक्षी उक्तोऽखिलस्य सः।
चैत्योपरागरूपत्वात् साक्षिताऽप्यध्रुवा चितः॥ ३०॥
उपलक्षणमेवेदमपि व्यावृत्तये जडात्।
अतः पुमाननिर्देश्योऽणुश्च सूक्ष्मश्च कथ्यते॥ ३१॥
विना दृश्यमदृश्यत्वादव्यक्तश्चोच्यते स्वतः।
अदृश्यो दृश्यते राहुर्गृहीतेन यथेन्दुना॥ ३२॥
अदृश्यं चाऽस्यमादर्शे चित् तथा स्वस्वबुद्धिषु।
चिति विश्वस्य सङ्गश्चेद् विश्वं भासेत सर्वदा॥ ३३॥
विश्वाधारोऽप्यतः शून्यमिति चिन्नीयते खवत्।
दृश्यदोषान् मृषाबुद्धिर्द्रष्टर्यारोप्य निर्मले॥ ३४॥
आदर्शे मलवद् व्योम्नि दोषदृष्ट्या तु तप्यते।
वस्तुतश्चिति नाऽस्त्येव मलो दृश्याश्रितः सदा॥ ३५॥
अतश्च निर्मलः स्वस्थो निर्दोषश्चोच्यते पुमान्।
सजातीयेषु वैधर्म्यलक्षणा नाऽस्ति यद् भिदा॥ ३६॥
अत आत्मा समः प्रोक्त ऐकरूप्याच्च सर्वदा।
देहाध्यक्षतया देही पुर्यभिव्यक्तितः पुमान्॥ ३७॥
एकाकित्वादद्वितीयः केवलश्चोच्यते तु सः।
चिच्छक्त्यप्रतिबन्धेन प्रोच्यतेऽनावृतः पुमान्॥ ३८॥
सर्वस्वामितया चाऽऽत्मा क्षेत्रज्ञः क्षेत्रवेदनात्।
हृत्सरोवरधीपद्मदलवृत्तिषु लीलया॥ ३९॥
चरन्निवाऽऽनन्दमीनान् भुञ्जानो हंस उच्यते।
हकारेण बहिर्याति सकारेण विशन् पुनः॥ ४०॥

प्राणवृत्त्याऽनया चाऽपि प्राण्यात्मा हंस उच्यते ।
शरीरागारहृद्धामगुहायां बुद्धिभार्यया ॥ ४१ ॥
व्यज्यमानस्तया सार्धं स्वपन्निव गुहाशयः ।
त्रिगुणात्मकमायां स्वां सान्निध्यात् परिणामयन् ॥ ४२ ॥
मायीति कथ्यते चाऽऽत्मा तत्कृतानन्तवेषधृक् ।
खान्येकादश भूतानि पञ्चैतानि तु षोडश ॥ ४३ ॥
पुंसः कलास्तत्त्वतस्तु निरंशत्वात् स निष्कलः ।
अहंशब्दः स्वामिवाची स्वामी साक्षी तु चेतसः ॥ ४४ ॥
अतोऽहमिति शब्देन चिन्मात्रं प्रोच्यते बुधैः ।
सर्वेश्वरः सर्ववेत्ता सर्वकर्ताऽद्वयः पुमान् ॥ ४५ ॥
सामान्यादुच्यते यद्वद् राजा सर्वनराधिपः ।
आत्माद्वैतस्य सूत्रेण जातिमात्रेण वर्णनात् ॥ ४६ ॥
प्रलये हि विजातीयद्वैतशून्यत्वमात्मनाम् ।
असङ्गत्वान् नित्यशुद्धो नित्यबुद्धश्च चित्त्वतः ॥ ४७ ॥
नित्यमुक्तस्तथा नित्यनिर्दुःखत्वात् पुमान् मतः ।
इत्यादिगुरुशास्त्रोक्तदिशा स्वानुभवेन च ॥ ४८ ॥
वैधर्म्यादात्मनोऽनात्मविवेकः क्रियतां बुधैः ।
परिच्छेदचतुष्केण पुम्प्रकृत्योः सुविस्तरात् ।
वैधर्म्यगण उक्तोऽयं ध्यायिनामाशु मुक्तिदः ॥ ४९ ॥

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे आत्मवैधर्म्यगणपरिच्छेदः ॥ ४ ॥

---

## अथ षष्ठः परिच्छेदः ।

विवेकमेव सद्युक्त्या मत्वा तदनुभूयते ।
राजयोगं यथा कुर्यात् समासेन तदुच्यते ॥ १ ॥
अशक्तो राजयोगस्य हठयोगेऽधिकारवान् ।
वासिष्ठे हि वसिष्ठाय भुसुण्डेनैवमीरितम् ॥ २ ॥
ज्ञानावृत्ती राजयोगे प्राणायामासने हठे ।
मुख्ये तेऽङ्गतयाऽन्योन्यं सेव्ये शक्त्यनुसारतः ॥ ३ ॥
विषयेऽनन्तदोषा ये श्रुतिस्मृतिसमीरिताः ।
त आदौ परिद्रष्टव्याश्चित्तस्थैर्याय योगिभिः ॥ ४ ॥
कामबीजान्यनन्तानि सम्प्ररोहन्ति यद्धृदि ।
तत्राऽटवीनिभे ज्ञानपुण्यसस्यं न वर्धते ॥ ५ ॥
दोषदृष्ट्यग्निसन्दग्धे कामबीजे तु चेतसि ।
गुरुशास्त्रहलैः कृष्टे सुक्षेत्रे तद्विवर्धते ॥ ६ ॥
सत्येष्वसत्तां प्रचुरां तथा रम्येष्वरम्यताम् ।
सुखेषु प्रचुरं दुःखं पश्यन् धीरो विरज्यते ॥ ७ ॥
ब्रह्मलोकोऽपि नरको विनाशामेध्यपूरितः ।
युक्तश्च स्वाधिकैरन्यैस्त्रैगुण्यादपि दुःखयुक् ॥ ८ ॥
तत्रत्यैरपि मुक्त्यर्थं यत्यते जन्मभीरुभिः ।
अतो ज्ञेयः समासेन लोकः सर्वोऽपि दुःखयुक् ॥ ९ ॥
इदं मे स्यादिदं मा स्यादितीच्छाव्यथितं मनः ।
स्वभावात् तेन विज्ञेयं दुःखं चित्तेन सङ्गतिः ॥ १० ॥

सुखं सुषुप्तिः परमा दुःखं विषयवेदनम् ।
सुखदुःखसमासोऽयं किमन्यैर्बहुभाषितैः ॥ ११ ॥
तस्मादनर्थानर्थाभान् परीक्ष्य विषयान् सुधीः ।
उत्सृजेत् परमार्थार्थी बालरम्यानहीनिव ॥ १२ ॥
इत्यादिकानन्तदोषदृष्ट्या रागस्य तानवे ।
मायाविवेकतः शुद्धमात्मानं चिन्तयेत् सदा ॥ १३ ॥
इदं तदिति निर्देष्टुं गुरुणाऽपि न शक्यते ।
उदासीनस्याऽऽत्मतत्त्वं स्वयमेव प्रकाशते ॥ १४ ॥
बुद्धिबोधात्मको बुद्धिसाक्षी बुद्धेः परो विभुः ।
कूटस्थोऽहं चिदादित्य इत्येकाग्रोऽनुचिन्तयेत् ॥ १५ ॥
वृत्तिबोधो घटच्छिद्रमिव नाशाल्प ईक्ष्यते ।
वस्तुतो वृत्तिबोधोऽहं पूर्णो व्योमवदक्षयः ॥ १६ ॥
अन्तर्यद् दृश्यते सर्वं तद् बुद्धेर्वृत्तिरुच्यते ।
तेभ्यो दुःखात्मकेभ्योऽहं साक्षात् तद्वीक्षिता पृथक् ॥१७॥
कर्मकर्तृविरोधो हि वृत्त्या वृत्तिप्रकाशने ।
वृत्तिधाराकल्पने च गौरवादिति निश्चितम् ॥ १८ ॥
हर्षशोकभयक्रोधलोभमोहमदैस्तथा ।
द्वेषाभिमानकार्पण्यनिद्रालस्यस्मरादिभिः ॥ १९ ॥
धर्माधर्मैश्च सम्पूर्णा बुद्धिर्दुःखमयी तु मे ।
आत्मानं दर्शयत्येव भास्करायेव रोगिणः ॥ २० ॥
अहं सर्वगतं शान्तं परमात्मघनं शुचि ।
अचिन्त्यचिन्मात्रनभो विश्वदर्पणमक्षयम् ॥ २१ ॥

निरञ्जनं निराधारं निर्गुणं निरुपद्रवम् ।
निर्विशेषं सजातीयात् समस्तार्थावभासकम् ॥ २२ ॥
ब्रह्मविष्णुमहेशाद्याः स्थावरान्ताश्च चेतनाः ।
अवैधर्म्यात्मकाभेदादहमित्यनुचिन्तयेत् ॥ २३ ॥
अहमन्ये च पुरुषाः समचिद्व्योमरूपिणः ।
अत आत्मैक एवाऽहमिति श्रुतिषु गीयते ॥ २४ ॥
इति पश्यन् स्वभोगैश्च योगी विश्वं प्रपूजयेत् ।
आत्मयागोऽप्ययं प्रोक्तः श्रुत्युक्तः साङ्ख्ययोगिनाम्॥२५॥
सर्वभूतस्थमात्मानं सर्वभूतानि चाऽऽत्मनि ।
समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति ॥ २६ ॥
इत्येवं मनुनाऽप्यात्मयागो ज्ञानाङ्गमीरितः ।
तस्मादभयदानेन स्वभोगाद्यर्चनेन च ॥ २७ ॥
सम्मानयन् भूतजातमात्मानमनुचिन्तयेत् ।
ब्रह्मविष्णुशिवादीनां भोगे रागश्च हीयते ॥ २८ ॥
तेषां स्वसाम्यदृष्ट्याऽतः साम्यं योगी विचिन्तयेत् ।
उत्पत्तौ प्रलये चैव सर्वावस्थासु सर्वदा ॥ २९ ॥
सर्वेषामेकरूपत्व द्रष्टू रागादिकं कुतः ।
विष्ण्वादयो महैश्वर्यं भुञ्जाना अपि नाऽधिकाः ॥ ३० ॥
मत्तोऽतोऽलं तदैश्वर्यैरविवेकिजनप्रियैः ।
गुणकर्मादिभिः किञ्चिन् निरीक्ष्याऽधिकमात्मनः ॥३१॥
तदर्थं यतते लोको नाऽहं पश्यामि मेऽधिकम् ।
तथा न्यूनं न पश्यामि यदतिक्रमशङ्कया ॥ ३२ ॥

देवा दैत्यजयायेव यतिष्ये तज्जयाशया ।
अहं यथा तथैवाऽन्ये आब्रह्मा नारका जनाः ॥ ३३ ॥
दृश्यन्ते स्वात्मवत् प्रेम्णा पितृभ्रातृसुतादिवत् ।
क ईश ईशितव्यो वा कः श्रेष्ठः कोऽधमोऽपि वा ॥ ३४ ॥
अभिन्ने भेददृष्ट्या स्यान् मृत्योर्भयमिति श्रुतिः ।
चिद्व्योमस्वेकरूपेषु ईशानीशादिरूपकः ॥ ३५ ॥
रूपभेदो ह्यसन् सर्वः स्फटिके रूपभेदवत् ।
धियां रूपैः पुमानेको बहुरूप इवेयते ॥ ३६ ॥
वृकचर्मादिरूपाद्यैर्मायीव बहुरूपधृक् ।
मामालिङ्ग्य निराकारं विविधाकारधारिणी ॥ ३७ ॥
मायैवैका हि नृत्यन्ती मोहयत्यखिला धियः ।
पुंसां भेदो बुद्धिभेदादम्बुभेदाद् यथा रवेः ॥ ३८ ॥
व्योम्नश्च छिद्ररूपेण भेदः कुम्भादिभेदतः ।
अतः शुद्धो बुद्धमुक्तः सर्वदा सर्वगोऽव्ययः ॥ ३९ ॥
अहमन्ये च तत्राऽहो शत्रुमित्रादिधीर्मृषा ।
ब्रह्मणीशे हराविन्द्रे सर्वभूतगणे तथा ॥ ४० ॥
उत्तमाधममध्यत्वविभागो मायया मृषा ।
त्रिगुणात्मकमायायास्त्रैविध्यादात्मनोऽपि हि ॥ ४१ ॥
उत्तमाधममध्यत्वत्रैविध्यं नैव हि स्वतः ।
यथा देहे तथाऽन्यत्र चित्प्रकाशोऽयमव्ययः ॥ ४२ ॥
व्यक्तताव्यक्ततामात्रभेदो ह्यन्तरबाह्ययोः ।
एवमन्येऽपि पुरुषा बद्धमुक्ताविशेषतः ॥ ४३ ॥

ईशानीशाविशेषाच्च पुरुषार्थो न मेऽस्त्यतः।
महानिद्रैव मे साध्वी दुःखभोगहरा प्रिया ॥ ४४ ॥
अप्रिया मूढचित्तानामसाध्वी धीहतात्मनाम्।
चिदादर्शे मयि धियो यद्यपि प्रतिबिम्बनम् ॥ ४५ ॥
तत्त्वतो नैव दोषाय तथाऽपि त्याज्यमेव तत्।
स्वभावादस्य हेयत्वं स्वानुभूत्या हि सिध्यति ॥ ४६ ॥
यथा कोऽपि परस्याऽपि वैरूप्यं न दिदृक्षति।
स्वामिन्यारोप्याऽऽत्मदोषान् साध्वीयमनुतप्यते ॥ ४७ ॥
निर्दोषं स्वामिनं दृष्ट्वा निर्दोषा स्यात् पतिव्रता।
एवमस्या रूपभेदेऽप्येकरूपोऽस्मि सर्वदा ॥ ४८ ॥
भुञ्जानो वाऽप्यभुञ्जानस्तां मदर्थामनन्यगाम्।
यथैकरूपतोपाधियोगायोगदशास्वहो ॥ ४९ ॥
आदर्शस्याऽमलस्यैव चिन्नभोदर्पणस्य मे।
दृश्यबुद्धिगता दोषाः साक्षात् तद्द्रष्टरि प्रभो ॥ ५० ॥
न सन्ति मयि मोहाद्या भास्करे भास्यदोषवत्।
दुःखैर्बद्धा स्वमात्मानं त्यक्त्वा मद्भावमागता ॥ ५१ ॥
मुच्यते दुःखबन्धाद् धीर्न मे मोक्षो न बन्धनम्।
कूटस्थासङ्गचिद्धाम्नि धीदुःखप्रतिबिम्बनम् ॥ ५२ ॥
योऽन्यो बन्धो भोगरूपः सोऽपि चिद्दर्पणे मृषा।
जाग्रदादित्रयावस्थासाक्षी ताभिर्विवर्जितः ॥ ५३ ॥
अहं पूर्णश्चिदादित्य उदयास्तविवर्जितः।
दर्पणे मुखवद् विश्वं मयि बोधे न तात्त्विकम् ॥ ५४ ॥

विभुत्वेऽपि च बाह्यान्तः सुषुप्त्यादावदर्शनात् ।
मयि वाऽन्यत्र वा पुंसि केवलानुभवे विभौ ॥ ५५ ॥
भाति यत् तद्विवर्त्तो धीप्रतिबिम्बात्मकत्वतः ।
शुक्तौ रजतवद् विश्वमतो मयि न दोषकृत् ॥ ५६ ॥
मरीचौ तोयवत् तद्वद् व्योमादौ नगरादिवत् ।
कालत्रयेऽपि नाऽस्त्येव मयि विश्वं सनातने ॥ ५७ ॥
अन्यत्राऽस्त्वथवा माऽस्तु बुद्ध्यादौ मम तेन किम् ।
मयि सर्वं यथा व्योम्नि सर्वत्राऽहं यथा नभः ॥ ५८ ॥
न सर्वं मयि सर्वत्र नाऽहं चालेपतः खवत् ।
अत एवाऽविभागाख्याभेदेन क्षीरनीरवत् ॥ ५९ ॥
ज्ञानात्मकमिदं विश्वं गायन्ति परमर्षयः ।
जगत् मम मदर्थत्वात् मच्छरीरसुखादिवत् ॥ ६० ॥
यथा मम तथाऽन्येषां ममैवेति धियो भ्रमः ।
वस्तुतस्तु न कस्याऽपि किमपि व्यभिचारतः ॥ ६१ ॥
स्वामित्वस्याऽध्रुवत्वेन पान्थस्याऽऽवासगेहवत् ।
एकं चिन्मात्रमस्तीह शुद्धं शून्यं निरञ्जनम् ॥ ६२ ॥
सूक्ष्मात् सूक्ष्मतरं तत्र न जगत् न जगत्क्रिया ।
दृश्यते सर्वदृश्याढ्या स्वस्वबुद्धिपरम्परा ॥ ६३ ॥
चिन्मण्डलमहादर्शे प्रतिबिम्बमुपागता ।
क्वचिद् व्यक्तं क्वचित् सूक्ष्मं नभः सर्वत्र तिष्ठति ॥ ६४ ॥
यथा तथा चिदाकाशं धीदेशेऽन्यत्र च स्थितम् ।
चिदाकाशमयं विश्वं यतोऽतो धीरितस्ततः ॥ ६५ ॥

भ्रमन्तो तत्र तत्रैव भासन्तेऽर्के घटादिवत्।
धर्माधर्मौ जन्ममृत्यू सुखदुःखादि चाऽखिलम्॥ ६६॥
जाग्रत्यपि मृषा स्वप्न इव जन्मादिकं मम।
दृश्ययोगवियोगाभ्यां चितो जन्मविनाशधीः॥ ६७॥
अभिव्यक्त्यनभिव्यक्तिदोषाभ्यां शशिनो यथा।
महासुषुप्तौ भवजन्ममृत्यु-
दुःस्वप्नधाराः क्षणभङ्गुरा धियः।
पश्याम्यहं ताभिरलिप्तरूपो
घनैरुपेतैर्विगतै रवेः किम्॥ ६८॥
इत्येवं सततं ध्यायन्नेकाग्रमनसा सुधीः।
साक्षात्करोत्यात्मतत्त्वं वागगोचररूपतः॥ ६९॥
स्वरूपं निर्मलं शान्तं मनस्त्यजति चेत् क्षणम्।
तदैव दृश्यसंस्कारशेषात् सङ्क्षुभ्यतीन्द्रियम्॥ ७०॥
उत्थितानुत्थितांस्तत्र इन्द्रियारीन् पुनः पुनः।
विवेकेनैव वज्रेण हन्यादिन्द्रो गिरीनिव॥ ७१॥

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे राजयोगप्रकार-
परिच्छेदः॥ * ॥

## अथ सप्तमः परिच्छेदः ।

एवमात्मानुभविनो जीवन्मुक्तस्य लक्षणम् ।
स्पष्टं वक्ष्ये भवेद् येन ज्ञानाज्ञानपरीक्षणम् ॥ १ ॥
श्रवणान् मननाद् वाऽऽपि अन्यथाऽऽत्मज्ञताभ्रमात् ।
कुर्याद् गुरुमविद्वांसं स्याच् चाऽज्ञो ज्ञाभिमान्यपि ॥ २ ॥
नैश्वर्यानागतज्ञत्वादिकं ज्ञानस्य लक्षणम् ।
तद्दतेऽपि हि कैवल्यं योगभाष्यकृतेरितम् ॥ ३ ॥
श्रौतस्मार्तानि वाक्यानि ज्ञानिनो मोक्षभागिनः ।
लक्षकाण्येव लिख्यन्ते विश्वासातिशयाय वै ॥ ४ ॥
यत्र सर्वाणि भूतानि आत्मैवाऽभूद् विजानतः ।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ ५ ॥
यः सर्वत्राऽनभिस्नेहस्तत् तत् प्राप्य शुभाशुभम् ।
नाऽभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६ ॥
न विस्मरति सर्वत्र यथा सततगो गतिम् ।
न विस्मरति निश्चेत्यं चिन्मात्रं प्राज्ञधीस्तथा ॥ ७ ॥
नोदेति नाऽस्तमायाति सुखे दुःखे मुखप्रभा ।
यथापूर्वस्थितिर्यस्य स जीवन्मुक्त उच्यते ॥ ८ ॥
यो जागर्ति सुषुप्तस्थो यस्य जाग्रन् न विद्यते ।
यस्य निर्वासनो बोधः स जीवन्मुक्त उच्यते ॥ ९ ॥
रागद्वेषभयादीनामनुरूपं चरन्नपि ।
योऽन्तर्व्योमवदत्यच्छः स जीवन्मुक्त उच्यते ॥ १० ॥
यस्य नाऽहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते ।

कुर्वतोऽकुर्वतो वाऽपि स जीवन्मुक्त उच्यते ॥ ११ ॥
अपि शीतरुचावर्के अत्युष्णेऽपीन्दुमण्डले।
अप्यधःप्रसवत्यग्नौ जीवन्मुक्तो न चाऽन्यधीः ॥ १२ ॥
चिदात्मन इमा नित्यम्प्रस्फुरन्तीह शक्तयः।
इत्यस्याऽऽश्चर्यजालेषु नाऽभ्युदेति कुतूहलम् ॥ १३ ॥
परव्यसनिनी नारी व्यग्राऽपि गृहकर्मणि।
तदेवाऽऽस्वादयत्यन्तर्नरसङ्गरसायनम् ॥ १४ ॥
एवं तत्त्वे परे शुद्धे धीरो विश्रान्तिमागतः।
तदेवाऽऽस्वादयत्यन्तर्बहिर्व्यवहरन्नपि ॥ १५ ॥
यो नित्यमध्यात्ममयो नित्यमन्तर्मुखः सुखी।
गम्भीरश्च प्रसन्नश्च गिराविव महाह्रदः ॥ १६ ॥
परानन्दरसालुब्धो रमते स्वात्मनाऽऽत्मनि।
सर्वकर्मपरित्यागी नित्यहृष्टो निरामयः ॥ १७ ॥
न पुण्येन न पापेन नेतरेणाऽपि लिप्यते।
येन केन चिदाच्छन्नो येन केन चिदाशितः ॥ १८ ॥
यत्र क्वचन शायी च स सम्राडिव राजते।
वर्णधर्माश्रमाचारशास्त्रमन्त्रनयोज्झितः। १९ ॥
निर्गच्छति जगज्जालात् पञ्जरादिव केसरी।
वाचामतीतविषयो विषयाशादशोज्झितः ॥ २० ॥
कामप्युपगतः शोभां शरदीव नभस्तलम्।
निःस्तोत्रो निर्नमस्कारः पूज्यपूजाविवर्जितः ॥ २१ ॥
संयुक्तो वा वियुक्तो वा सदाचारनयक्रमैः।

एतावदेव खलु लिङ्गमलिङ्गमूर्त्तेः
संशान्तसंसृतिचिरभ्रमनिर्वृतस्य।
तत्त्वस्य यन्मदनकोपविषादलोभ-
मोहापदामनुदिनं निपुणं तनुत्वम्॥ २२॥
तुर्यविश्रान्तियुक्तस्य प्रतितीर्णस्य भवार्णवात्।
न कृतेनाऽकृतेनाऽर्थो न श्रुतिस्मृतिविभ्रमैः॥ २३॥
तनुं त्यजतु वा तीर्थे श्वपचस्य गृहेऽथवा।
ज्ञानसम्प्राप्तिसमये मुक्त एवाऽमलाशयः॥ २४॥
न मोक्षो नभसः पृष्ठे न पाताले न भूतले।
सर्वाशासङ्क्षये चेतःक्षयो मोक्ष इति श्रुतेः॥ २५॥
जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते।
विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव॥ २६॥
अनाशाखिलशैलादिप्रतिबिम्बे हि यादृशी।
स्याद् दर्पणे दर्पणता केवलात्मस्वरूपिणी॥ २७॥
अहं त्वं जगदित्यादौ प्रशान्ते दृश्यसम्भ्रमे।
स्यात् तादृशी केवलता स्थिते द्रष्टर्यवीक्षणे॥ २८॥
चिन्मात्रं चेत्यरहितमनन्तमजरं शिवम्।
अनादिमध्यनिलयं यदनाधि निरामयम्॥ २९॥
न शून्यं नाऽपि चाऽऽकारं न दृश्यं न च दर्शनम्।
अनाख्यमनभिव्यक्तं तत् किञ्चिदवशिष्यते॥ ३०॥

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे जीवन्मुक्तिपरममुक्त्योः परिच्छेदः॥ * ॥

इति साङ्ख्यसारस्योत्तरभागः। साङ्ख्यसाराख्यं प्रकरणं समाप्तम्।

# BIBLIOTHECA INDICA;

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE SUPERINTENDENCE OF

THE ASIATIC SOCIETY OF BENGAL.

NEW SERIES.

NOS. 32 & 81.



THE

# SA'NKHYA APHORISMS OF KAPILA,

WITH EXTRACTS FROM

VIJNA'NA BHIKSU'S COMMENTARY,

TRANSLATED BY

J. R. BALLANTYNE, LL. D.





CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS.

1865.

# SÁNKHYA APHORISMS

OF

# KAPILA.



## BOOK I.

अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः ॥ १ ॥

*The summum bonum.*

*Aph.* 1.—Well, the complete cessation of pain [which is] of three kinds is the complete end of man.

न दृष्टात्तत्सिद्धिर्निवृत्तेरप्यनुवृत्तिदर्शनात् ॥ २ ॥

*The end, the summum bonum, is not to be attained by ordinary means.*

*Aph.* 2.—The effectuation of this [complete cessation of pain] is not [to be expected] by means of the visible [—means of obviating evil, such as wealth, &c.—], for we see [—on the loss of wealth, &c.—] restoration [of the misery and evil] after [its temporary] cessation.

प्रात्यहिकक्षुत्प्रतीकारवत्तत्प्रतीकारचेष्टनात्पुरुषार्थत्वम् ॥ ३ ॥

*The question whether the end may not be attained by the recurrent use of ordinary means.*

*Aph.* 3.—[Let us consider the doubt that] the soul's desire [the cessation of pain—may result] from [recurrent and sustained] exertions for the obviation [of pain], as in the case of the obviation of daily hunger.

सर्वासम्भवात्सम्भवेऽपि सत्त्वासम्भवाद्धेयः प्रमाणकुशलैः ॥ ४ ॥

*This suggestion negatived.*

*Aph.* 4.—This [method of palliatives], is to be rejected by those who are versed in evidence, because it is not everywhere possible [to employ it at all], and because, even if this *were* possible, there would be an impossibility as regards [ensuring] the perfect fitness [of the appliances].

उत्कर्षादपि मोक्षस्य सर्वोत्कर्षश्रुतेः ॥ ५ ॥

*Scriptural evidence in favour of this view.*

*Aph.* 5.—Also [an inferior method of riddance from "the ills that flesh is heir to," ought not to be adopted] because of the pre-eminence of Liberation [from 'Bondage,'—as proved] by the text [of scripture declaratory] of the pre-eminence above all else [—of Liberation, as the effectual remedy].

अविशेषश्चोभयोः ॥ ६ ॥

*An objection met.*

*Aph.* 6.—And there is no difference between the two, [—no difference in the applicability of liberation, as the remedy, on either of the suppositions, which we shall now consider, viz., that the bondage is essential or that it is adventitious.]

न स्वभावतो बद्धस्य मोक्षसाधनोपदेशविधिः ॥ ७ ॥

*Liberation must be possible, else the means would not have been enjoined.*

*Aph.* 7.—There were no rule in the enjoining of means for the liberation of one bound *essentially*, [—because, —to explain the meaning by an illustration,—"*fire* cannot be liberated from its *heat* which is essential to it,—since that which is *essential* exists as long as the substance exists."]

स्वभावस्यानपायित्वादननुष्ठानलक्षणमप्रामाण्यम् ॥ ८ ॥

*Scripture would be nugatory if pain were inevitable.*

*Aph.* 8.—Since an essential nature is imperishable, unauthoritativeness, betokened by impracticableness, [would be chargeable against

the scripture, instructing us to get *free* from pain, if pain were essential to humanity:—and this is out of the question,—Scripture being assumed here, as in all others of the six systems, to be an exact measure of truth].

नाशक्योपदेशविधिरुपदिष्टे ऽप्यनुपदेशः ॥ ९ ॥

*An impracticable injunction is no rule.*

*Aph.* 9.—There is no rule where something impossible is enjoined; though it *be* enjoined, it is no injunction [" but only the *semblance* of an injunction; because it stands to reason that not even the *Veda* can make one see sense in an absurdity."]

शुक्लपटवद्बीजवच्चेत् ॥ १० ॥

*A doubt whether the essential be not removeable.*

*Aph.* 10.—If [some one says]—as in the case of white cloth, or of a seed, [—something essential may be not irremoveable; then he will find his answer in the next aphorism. The doubter is supposed to argue—" the destruction even of what is essential (—in spite of what is stated under *Aph.* 7—) *is* seen; as for example, the essential whiteness of white cloth is removed by dyeing, and the essential power of germination in a seed is removed by fire. Therefore, according to the analogy of the white cloth and the seed, it is possible that there should be the removal of the bondage of the soul even though it *were* essential. So too there may be (without any impropriety) the enjoinment of the *means* thereof."]

शक्त्युद्भवानुद्भवाभ्यां नाशक्योपदेशः ॥ ११ ॥

*Decision that an essential property may be hidden but not removed.*

*Aph.* 11.—Since both perceptibleness and [subsequent] non-perceptibleness may belong to some power [which is indestructible], it is not something *impracticable* that is enjoined [when one is directed to render some indestructible power imperceptible. " In regard even to the two examples mentioned in Aph. 10, people do not give an injunction for the positive destruction of something essential, which is indestruc-

tible. Why do we say this? Because in these two instances of the perceptibleness and non-perceptibleness of a power,—the powers, namely, of appearing white, and of germinating,—there are merely the manifestation and afterwards the *hiding* of the whiteness, &c., but not the *removal* of the whiteness or of the power of germination;—because—that is to say—the whiteness of the dyed cloth and the germinating power of the roasted seed can again be brought out by the processes of the bleacher, in the case of the dyed cloth,—and by the will of the *Yogí*—the possessor of supernatural powers,—in the case of the roasted seed."—An example more in accordance with modern views, when the Scientist has superseded the *Yogí*, would be that of Chlorine—with its suffocating odour hidden by union with Sodium in culinary salt, but ready to reappear—fresh in its indestructibility—on the addition of Sulphuric Acid and black Oxide of Manganese. But the *destruction* of Bondage is enjoined;—hence it cannot be *essential* to man. "Wishing to disprove also the notion that it is the result of some adherent *cause*, he rejects the various supposable causes, viz., Time &c."]

न कालयोगतो व्यापिनो नित्यस्य सर्वसम्बन्धात् ॥ १२ ॥

*Time, which applies to all, cannot be the cause of the bondage of a part.*

*Aph.* 12.—Not from connection with *time* [does bondage befall the soul], because this, all-pervading and eternal, is eternally associated [with *all*, and not with those alone who are in bondage].

न देशयोगतोऽप्यस्मात् ॥ १३ ॥

*Place, for the same reason, cannot be the cause.*

*Aph.* 13.—Nor [does bondage arise] from connection with *place* either, for the same reason.

नावस्थातो देहधर्मत्वात्तस्याः ॥ १४ ॥

*The soul is not kept in bondage by its being conditioned.*

*Aph.* 14.—Nor [does the bondage of the soul arise] from its being conditioned [by its standing among cir-

cumstances that clog it by limiting it], because *that* is the fact in regard to [not the soul but] the *body*.

असङ्गो ऽयम्पुरुष इति ॥ १५ ॥

*The soul is absolute.*

*Aph.* 15.—Because this soul is [unassociated with any conditions or circumstances that could serve as its bonds:—it is] absolute. ["The word *iti* here shows that it, i. e. the assertion conveyed in the aphorism, is a *reason*,—the construction, with the preceding aphorism, being this, that, *since* the soul is unassociated, it belongs only to the *body* to be conditioned."]

न कर्मणान्यधर्मत्वादतिप्रसक्तेश्च ॥ १६ ॥

*The fruit of works belongs not to the soul.*

*Aph.* 16.—Nor [does the bondage of soul arise] from any work, because these are the property of another, [viz., the mind,] and because it [the bondage] might be eternal [if the case were as you imagine; for, "if through a property of another, the bondage of one quite distinct could take place, then bondage might befall even the liberated"—through some acts of some one else.]

विचित्रभोगानुपपत्तिरन्यधर्मत्वे ॥ १७ ॥

*Why it is that the bondage must belong to the soul, and not to the mind merely.*

*Aph.* 17.—If it were the property of any other, then there could not be diverse experience, [—"there could be no such different experience as one man's experiencing pain and another man's not," for, it must be remembered, it is not in point of *mind* but of *soul* that men are held by Kapila to be numerically different;—"therefore it must be admitted that pain is connected with the soul also. And this (pain that belongs to the soul) is in the shape merely of a *reflection* of the pain" that attaches to its own attendant organism].

प्रकृतिनिबन्धनाच्चेन्न तस्यापि पारतन्त्र्यम् ॥ १८ ॥

*Nature is not the immediate cause of the soul's bondage.*

*Aph.* 18.—If [you say that the soul's bondage arises] from Nature as its cause, [then I say] no,—[because]

that also is a dependent thing, [—"because that also, i. e. Nature also, is dependent (—for its power of seemingly binding or influencing soul—) on the *conjunction* which is to be mentioned in the next aphorism." "Therefore, since Nature can be the cause of bondage only as depending on something else (—i. e. on the conjunction to be mentioned in the next aphorism), through this very sort of conjunction it follows that the bondage is *reflectional,*—like the heat of water due to the conjunction of fire," —water being held to be essentially cold, and only to *seem* hot while the heat continues in conjunction with it].

न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृतेतु ॥ १९ ॥

*What really is the relation of its bondage to the soul.*

*Aph.* 19.—But not without the conjunction thereof [i. e. of Nature] is there the connection of that [i. e. of pain] with that [viz. the soul] which is ever essentially a pure and free intelligence,—[while the bondage of the soul is reflectional—and not inherent in it either essentially or adventitiously. "For if bondage were produced by the conjunction (of the soul) with nature, as colour is produced by heating (—in the case of a jar of black clay which becomes red in the baking—), then, just like that, it would continue even after disjunction therefrom,"—as the red colour remains in the jar after the fire of the brick-kiln has been extinguished,—whereas the red colour occăsioned in a crystal vase by a China-rose, while it occurs *not without* the China-rose, ceases on the removal thereof. "Next he rejects certain causes of [the soul's] bondage preferred by others."]

( नाविद्यातोऽप्यवस्तुना बन्धायोगात् ॥ २० ॥

*The Vedántic tenet on this point disputed.*

*Aph.* 20.—Not from Ignorance, too, [does the soul's bondage, as the Vedántin holds, arise], because that which is not a reality is not adapted to binding,—[for "the binding of any one with a rope merely *dreamt* of was never witnessed."]

वस्तुत्वे सिद्धान्तहानिः ॥ २१ ॥

*The Vedántin cannot evade the objection without stultifying himself.*

*Aph.* 21.—If it ['Ignorance'] *be* [asserted by you to be] a reality, then there is an abandonment of the [Vedántic] tenet [by you who profess to follow the Vedánta].

विजातीयद्वैतापत्तिश्च ॥ २२ ॥

*The Vedántin cannot evade the objection without conceding a duality.*

*Aph.* 22.—And [if you assume 'Ignorance' to be a reality, then] there would be a *duality* through [there being] something of a different kind [from soul,—which you asserters of *non-duality* cannot contemplate allowing. "For the followers of the *Vedánta*, asserting *non-duality*, hold that there is neither a duality through there being something of the same kind with soul nor through there being something of a different kind."]

विरुद्धोभयरूपा चेत् ॥ २३ ॥

*The Vedántin must not allege that 'Ignorance' is at once real and unreal.*

*Aph.* 23.—If [the Vedántin alleges, regarding 'Ignorance,' that] it is in the shape of both these opposites, [—then we shall say Nay, for the reason to be assigned in the next aphorism].

न तादृक्पदार्थाप्रतीतेः ॥ २४ ॥

*There is no such thing as a thing at once real and unreal.*

*Aph.* 24.—[To the suggestion that 'Ignorance' is at once real and unreal, we say] no,—because no such thing is known [as is at once real and unreal].

न वयं षट्पदार्थवादिनो वैशेषिकादिवत् ॥ २५ ॥

*A question whether the Vedántin is bound to avoid self-contradiction.*

*Aph.* 25.—[Possibly the Vedántin may remonstrate—] "*We* are not asserters of any Six Categories like the *Vais'eshikas* and others" [—like the *Vais'eshikas* who arrange all

things under six heads, and the *Naiyáyikas* who arrange them under sixteen;—"therefore we hold that there *is* such a thing —unknown though it be (to people in general)—as 'Ignorance' which is at once real and unreal, or (if you prefer it) which differs at once from the real and the unreal (—see *Vedánta-sára* §21—), because this is established by proofs," scriptural or otherwise, which are satisfactory to *us*, although they may not comply with all the technical requisitions of Gautama's scheme of argumentative exposition,—see Nyáya Aphorisms, Aph. 35. This Vedántic pretence of evading the objection by disallowing the categories of the Nyáya, he disposes of as follows.]

अनियतत्वे ऽपि नायौक्तिकस्य संग्रहो ऽन्यथा बालोन्मत्तादिसमत्वम् ॥ २६ ॥

*The self-contradictory is altogether inadmissible.*

*Aph.* 26.—Even although this be not compulsory [that the categories be reckoned six or sixteen], there is no acceptance of the inconsistent, else we come to the level of children and madmen and the like:—[for, "let there be no system of categories, still, since *being* and *not-being* are contradictory, it is impossible for any disciples to admit, merely on your worship's assertion, a thing at once real and unreal, which is inconsistent,—contrary to all fitness; otherwise we might as well accept also the self-contradictory assertions of children and the like;—such is the meaning."]

नानादिविषयोपरागनिमित्तको ऽप्यस्य ॥ २७ ॥

*The heretical theory of a succession of momentary objects from all eternity, as causing the soul's bondage, rejected.*

*Aph.* 27.—[The bondage] thereof, moreover, is not caused by any influence of objects from all eternity, [as those imagine who assert that there exist external objects, of momentary duration individually, each being, however, replaced by its fac-simile the next instant, so that the uninterrupted series of productions becomes something equivalent to continuous duration, and so that by the influence of these the bondage of the soul is occasioned.]

न बाह्याभ्यन्तरयोरुपरज्योपरञ्जकभावो ऽपि देशव्यवधानात् स्रुघ्नस्थपाटलिपुत्रस्थयोरिव ॥ २८ ॥

*A thing cannot act where it is not.*

*Aph.* 28. Also between the external and the internal there is not the relation of influenced and influencer, because there is a local separation, as there is between him that stays at Srughna and him that stays at Páṭaliputra, [—and, "in the opinion of these (persons whose theory we are at present objecting to), the soul is circumscribed, residing entirely within the body; and that which is thus *within* cannot stand in the relation of the influenced and the influencer as regards an *external* object. Why? Because they are separated in regard to place, like two persons the one of whom remains in Srughna and the other in Páṭaliputra;—such is the meaning. Because the affection which we call 'influence' (*vásaná*) is seen only when there is conjunction,—such as that of madder and the cloth (—to which it gives its colour—) or that of flowers and the flower-basket (—to which they impart their odour.") And if these heretics reply "The influence of objects (on the soul) may be asserted, because there *is* a contact with the object, inasmuch as the soul, according to *us*, goes to the place of the object, just as the senses according to your worship," then we declare as follows.]

द्वयोरेकदेशलब्धोपरागान्न व्यवस्था ॥ २९ ॥

*On the heretical view the free soul would be equally liable to bondage.*

*Aph.* 29. [It is impossible that the soul's bondage should arise] from an influence received in the same place [where the object is, because, in that case,] there would be no distinction between the two [—the bond and the free,—the free soul, according to this hypothesis, being just as liable to come across objects as any other—].

अदृष्टवशाच्चेत् ॥ ३० ॥

*The heretic's attempted defence.*

*Aph.* 30. If [the heretic, wishing to save his theory, suggests that a differ-

ence between the two cases—*does* exist] in virtue of the *unseen* [—i. e. of merit and demerit,—then he will find his answer in the next aphorism. We suppose the heretic to argue—" But then, granting that they (the free soul and the bound) are alike in respect of their coming into contact with objects, when they become conjoined with them in one and the same locality, yet the *reception of the influence* may result merely from the force of the *unseen*"—i. e. from the merit or demerit of this or that soul,—the soul that is liberated alike from merit and demerit being able to encounter with impunity the object that would enchain one differently circumstanced.]

न द्वयोरेककालायोगादुपकार्य्योपकारकभावः ॥ ३१ ॥

*Each back must bear its own burden.*

*Aph.* 31. They [—the soul to-day and the soul to-morrow, on your theory of momentary duration,] cannot stand in the relation of deserver and bestower, since the two do not belong to one and the same time; [—" that is to say, since, in thy opinion, the agent and the patient are distinct, and do not belong to the same time (—believing, as thou heretically dost, not only that *objects* momentarily perish and are replaced, but that the duration of *souls* also is of a like description—), there is positively no such relation (between the soul at one time and its successor at another) as that of deserver and bestower (or transmitter of its merits or demerits); because it is impossible that there should be an influence of objects taking effect on a patient (—say the soul of to-day—) occasioned by the 'unseen' (merit or demerit) belonging to an agent" (—say the soul of yesterday—), which, on the hypothesis in question, is a numerically different individual.]

पुत्रकर्म्मवदिति चेत् ॥ ३२ ॥

*Whether merit may or may not be imputed.*

*Aph.* 32. If [the heretic suggests that] the case is like that of the ceremonies in regard to a son, [—then he will find his reply by 'looking

forward. The heretic—admitting the principle that the merit or demerit of an act belongs entirely to the agent—may urge that "as the son is benefited by ceremonies in regard to a son,—such as that (ceremony—see Colebrooke's Hindú Law, vol. 3, p. 104—celebrated) in anticipation of conception,—which (no doubt) belongs to the *father* (who performs the ceremonies to propitiate the gods),—in like manner there may be an influence of objects on the experiencer (—say the soul of to-day—) through the merit or demerit that belongs even to a different subject (—say the soul of yesterday—) : such is the meaning" of the heretic. He refutes this by showing that the illustration is not a fact.]

नास्ति हि तत्र स्थिर एक आत्मा यो गर्भाधानादिना संस्क्रियेत ॥ ३३ ॥

*This will not help the heretic's argument.*

*Aph.* 33. [Your illustration proves nothing,] for on *that* theory [of you heretics], there is no one permanent soul which could be consecrated by the ceremonies in anticipation of conception, &c. [—i. e. "on thy theory moreover the benefit of the son, by means of the performance of the ceremonies in anticipation of conception, &c., could not even take place,—because, on that theory there is not one (self-identical) soul, continuing from the time of conception to birth, which could be consecrated (by the ceremonies in question) so as to be a fit subject for the duties that pertain to the time subsequent to birth (—such as the investiture with the sacred thread, for which the young bráhman would not be a fit subject if the ceremonies in anticipation of his conception had been omitted—) ; and thus your illustration is not a real one" on your *own* theory ;—(it is not a thing that you can assert as a fact.) "And according to *my* theory also your illustration is not a fact, seeing that it *is* possible that the benefit to the son should arise from the merit deposited in the son by means of the ceremony regarding the son, for it is an implied tenet (of my school) that it (the soul) is permanent (in its self-identity,—so that it is

a conceivable depositary of merit), and there is the injunction' of Manu—ch. 2. v. 26.—, with regard to the ceremonies in question, which proceeds on the assumption of the possibility of imputed righteousness].

स्थिरकार्यासिद्धेः क्षणिकत्वम् ॥ ३४ ॥

*Whether bondage too may not be momentary and so require no cause.*

*Aph.* 34. Since there is no such thing as a permanent result [—may some other argue on the heretical view], —the momentariness [of bondage also is to be admitted. "And thus the position fallen back upon is, that bondage need have no cause at all. And this is the application of the argument—viz.—

(1) Bondage, &c., is momentary :—
(2) Because it exists :—and
(3) Every thing that exists is momentary, as the apex of the lamp-flame, or the like.

And (—continues the heretic—) this (reason—viz. 'existence'—) does not extend *unduly* (—as you may object—) to the case of (what *you* choose to regard as a *permanent* product, such as) a jar or the like, because *that* also (in *my* opinion) is like the subject in dispute (in being momentary),—this being precisely what is asserted in the expression 'Since there is *no such thing* as a permanent result.'"]

न प्रत्यभिज्ञाबाधात् ॥ ३५ ॥

*The fact of recognition proves that things are not momentary.*

*Aph.* 35. Nay—[we reply to these heretics,—things are *not* momentary in their duration], for the absurdity of this is proved by *recognition* :—["in fact *nothing* is momentary, because the absurdity of its being momentary follows from the opposite argument to yours taken from such facts of recognition as 'What I saw,—that same do I touch,'—(an argument which may be fully stated as follows)—viz.

(1) Bondage, &c., is a permanent thing (—not a momentary thing—);
(2) Because it exists:—and
(3) Every thing that exists is a permanent thing,—as a jar, or the like."]

श्रुतिन्यायविरोधाच्च ॥ ३६ ॥

*That things are momentary is contradicted by Scripture and reasoning.*

*Aph.* 36. And [things are not momentary] because this is contradicted by Scripture and by reasoning:—["that is to say,—*nothing* is momentary, because the principle that the whole world, consisting of effects and causes, is momentary, is contradicted by such texts as this—viz. 'All this, O ingenuous one, was antecedently existing,'—and by such scriptural and other arguments as this, viz. 'How should what exists proceed from the non-existent?'"]

दृष्टान्तासिद्धेश्च ॥ ३७ ॥

*The heretic's illustration is not a truth.*

*Aph.* 37. And [we reject the argument of this heretic] because his instance is not a fact:—["that is to say,—the principle of the momentariness of all things is denied, because this momentary character does not in fact belong to such instances as the apex of the lamp-flame (on which thou, heretic, dost ground thy generalization):—moreover thou quite errest in regard to momentariness in that instance from not taking account of the minute and numerous instants (really included in a duration the 'latens processus' of which thou failest to discern). Moreover if the momentary duration of things be asserted, then there can be no such thing as the relation of cause and effect in the case of the earth and the jar, and the like. And you must not say that there *is* no such thing as the relation of cause and effect, because it is proved to be a reality by the fact that otherwise there would be no such thing as the efforts of him who desires an effect (—

and who therefore sets in operation the causes adapted to its production). With reference to this he declares as follows."]—

युगपज्जायमानयोर्न कार्यकारणभावः ॥ ३८ ॥

*The causal relation is not between things that arise simultaneously.*

*Aph.* 38. It is not between two things coming simultaneously into existence that the relation of cause and effect exists,— [for, let us ask,—" does the relation of product and material cause exist between the earth and the jar as *simultaneously* coming into (their supposed momentary) existence, or as successive? Not the first,—because there is nothing to determine that, and because we should not in that case find the man who wants a jar operating with earth, &c., (with a view to the jar's *subsequent* production.) Neither is it the last,—in regard to which he declares as follows."]

पूर्वापाये उत्तरायोगात् ॥ ३९ ॥

*A product cannot survive its substantial cause.*

*Aph.* 39. Because when the antecedent departs, the consequent is incompetent [either to arise or to survive it.]

तद्भावे तदयोगादुभयव्यभिचारादपि न ॥ ४० ॥

*The co-existence of substantial cause and product is impossible, if things be momentary.*

*Aph.* 40. Moreover not, [on the theory of the momentary duration of things, can there be such a relation as that of cause and effect,] because while the one [the antecedent] exists, the other [the consequent] is incompatible, because the two keep always asunder. [" To complete the aphorism we must say,—' moreover, (on the theory objected to) there can be no such relation as that of cause and effect, because at the time when the antecedent exists, the consequent cannot co-exist with it, the two being mutually exclusive.' The two suggesters of the relation of cause and effect are (1) this concomitancy of affirmatives—that while the product exists, the substance thereof exists, and (2) this concomitancy of negа-

